डाकिनीनां डमरुक-सहिता दोल हिण्डोल डिम्भा। रं-रं-रं रक्त-वस्त्रा सरसिज-नयना पातु मां देवि दुर्गा॥१३॥

॥ श्रीकालीसहस्रनामस्तोत्रम् ॥ कालिकाकुलसर्वस्वे श्रीगणेशाय नमः । ॐ श्रीगुरुभ्यो नमः । कथितोऽयं महामन्त्रः सर्वमन्त्रोत्तमोत्तमः । यमासाद्य मया प्राप्तमैश्वर्यपदमुत्तमम् ॥ १॥ संयुक्तः परया भक्त्या यथोक्तविधिना भवान् । कुरुतामर्चनं देव्याः त्रैलोक्यविजिगीषया ॥ २॥ श्रीपरशुराम उवाच प्रसन्नो यदि मे देवः परमेशः पुरातनः । रहस्यं परया देव्याः कृपया कथय प्रभो ॥ ३॥ यथार्चनं विना होमं विना न्यासं विनाबलिम् । विना गन्धं विना पुष्पं विना नित्योदितक्रिया ॥ ४॥ प्राणायामं विना ध्यानं विना भूतविशोधनम् । विना जाप्यं विना दानं विना काली प्रसीदति ॥ ५॥ श्रीशङ्कर उवाच । पृष्टं त्वयोत्तमं प्राज्ञ भृगुवंशविवर्धनम् । भक्तानामपि भक्तोऽसि त्वमेवं साधयिष्यसि ॥ ६॥ देवीं दानवकोटिघ्नीं लीलया रुधिरप्रियाम् । सदा स्तोत्रप्रियामुग्रां कामकौतुकलालसाम् ॥ ७॥ सर्वदाऽऽनन्दहृदयां वासव्यासक्तमानसाम् । माध्वीकमत्स्यमांसादिरागिणीं रुधिरप्रियाम् ॥ ८॥ श्मशानवासिनीं

प्रेतगणनृत्यमहोत्सवाम् । योगप्रभां योगिनीशां योगीन्द्रहृदये स्थितां ॥ ९॥ तामुग्रकालिकां राम प्रसादयितुमर्हसि । तस्याः स्तोत्रं महापुण्यं स्वयं काल्या प्रकाशितम् ॥ १०॥ तव तत्कथयिष्यामि श्रुत्वा वत्सावधारय । गोपनीयं प्रयत्नेन पठनीयं परात्परम् ॥ ११॥ यस्यैककालपठनात्सर्वे विघ्नाः समाकुलाः । नश्यन्ति दहने दीप्ते पतङ्गा इव सर्वतः ॥ १२॥ गद्यपद्यमयी वाणी तस्य गङ्गाप्रवाहवत् । तस्य दर्शनमात्रेण वादिनो निष्प्रभा मताः ॥ १३॥ राजानोऽपि च दासत्वं भजन्ति च परे जनाः । तस्य हस्ते सदैवास्ति सर्वसिद्धिर्न संशयः ॥ १४॥ निशीथे मुक्तये शम्भुर्नग्नः शक्तिसमन्वितः । मनसा चिन्तयेत्कालीं महाकालीति लालिताम् ॥ १५॥ पठेत्सहस्रनामाख्यं स्तोत्रं मोक्षस्य साधनम् । प्रसन्ना कालिका तस्य पुत्रत्वेनानुकम्पते ॥ १६॥ वेधा ब्रह्मास्मृतेर्ब्रह्म कुसुमैः पूजिता परा । प्रसीदति तथा काली यथानेन प्रसीदति ॥ १७॥ ॐ अस्य श्रीकालिकासहस्रनामस्तोत्रमहामन्त्रस्य महाकालभैरव ऋषिः अनुष्टुप् छन्दः श्मशानकालिका देवता महाकालिकाप्रसादसिद्ध्यर्थे जपे विनियोगः ॥ ध्यानम् । शवारूढां महाभीमां घोरदंष्ट्रां हसन्मुखीम् । चतुर्भुजां खड्गमुण्डवराभयकरां शिवाम् ॥

मुण्डमालाधरां देवीं लोलज्जिह्वां दिगम्बराम् । एवं सञ्चिन्तयेत्कालीं श्मशानालयवासिनीम् ॥ अथ स्तोत्रम् ।।ॐ क्रीं महाकाल्यै नमः ॥ ॐ श्मशानकालिका काली भद्रकाली कपालिनी । गुह्यकाली महाकाली कुरुकुल्ला विरोधिनी ॥ १८॥ कालिका कालरात्रिश्च महाकालनितम्बिनी । कालभैरवभार्या च कुलवर्त्मप्रकाशिनी ॥ १९॥ कामदा कामिनी काम्या कामनीयस्वभाविनी । कस्तूरीरसनीलाङ्गी कुञ्जरेश्वरगामिनी ॥ २०॥ ककारवर्णसर्वाङ्गी कामिनी कामसुन्दरी । कामार्ता कामरूपा च कामधेनुः कलावती ॥ २१॥ कान्ता कामस्वरूपा च कामाख्या कुलपालिनी । कुलीना कुलवत्यम्बा दुर्गा दुर्गार्तिनाशिनी ॥ २२॥ कौमारी कुलजा कृष्णा कृष्णदेहा कृशोदरी । कृशाङ्गी कुलिशाङ्गी च क्रीङ्कारी कमला कला ॥ २३॥ करालास्या कराली च कुलकान्ताऽपराजिता । उग्रा चोग्रप्रभा दीप्ता विप्रचित्ता महाबला ॥ २४॥ नीला घना बलाका च मात्रामुद्रापिताऽसिता । ब्राह्मी नारायणी भद्रा सुभद्रा भक्तवत्सला ॥ २५॥ माहेश्वरी च चामुण्डा वाराही नारसिंहिका । वज्राङ्गी वज्रकङ्काली नृमुण्डस्रग्विणी शिवा ॥ २६॥ मालिनी नरमुण्डाली गलद्रक्तविभूषणा ।

रक्तचन्दनसिक्ताङ्गी सिन्दूरारुणमस्तका ॥ २७॥ घोररूपा घोरदंष्ट्रा घोराघोरतरा शुभा । महादंष्ट्रा महामाया सुदती युगदन्तुरा ॥ २८॥ सुलोचना विरूपाक्षी विशालाक्षी त्रिलोचना । शारदेन्दुप्रसन्नास्या स्फुरत्स्मेराम्बुजेक्षणा ॥ २९॥ अट्टहासप्रसन्नास्या स्मेरवक्त्रा सुभाषिणी । प्रसन्नपद्मवदना स्मितास्या प्रियभाषिणि ॥ ३०॥ कोटराक्षी कुलश्रेष्ठा महती बहुभाषिणी । सुमतिः कुमतिश्चण्डा चण्डमुण्डातिवेगिनी ॥ ३१॥ प्रचण्डा चण्डिका चण्डी चर्चिका चण्डवेगिनी । सुकेशी मुक्तकेशी च दीर्घकेशी महत्कचा ॥ ३२॥ प्रेतदेहा कर्णपूरा प्रेतपाणिसुमेखला । प्रेतासना प्रियप्रेता प्रेतभूमिकृतालया ॥ ३३॥ श्मशानवासिनी पुण्या पुण्यदा कुलपण्डिता । पुण्यालया पुण्यदेहा पुण्यश्लोकी च पावनी ॥ ३४॥ पुत्रा पवित्रा परमा पुरापुण्यविभूषणा । पुण्यनाम्नी भीतिहरा वरदा खड्गपाणिनी ॥ ३५॥ नृमुण्डहस्तशस्ता च छिन्नमस्ता सुनासिका । दक्षिणा श्यामला श्यामा शान्ता पीनोन्नतस्तनी ॥ ३६॥ दिगम्बरा घोररावा सृक्कान्ता रक्तवाहिनी । घोररावा शिवा खड्गा विशङ्का मदनातुरा ॥ ३७॥ मत्ता प्रमत्ता प्रमदा सुधासिन्धुनिवासिनी । अतिमत्ता महामत्ता सर्वाकर्षणकारिणी ॥

३८॥ गीतप्रिया वाद्यरता प्रेतनृत्यपरायणा । चतुर्भुजा दशभुजा अष्टादशभुजा तथा ॥
३९॥ कात्यायनी जगन्माता जगती परमेश्वरी । जगद्बन्धुर्जगद्धात्री जगदानन्दकारिणी
॥ ४०॥ जन्ममयी हैमवती महामाया महामहा । नागयज्ञोपवीताङ्गी नागिनी
नागशायिनी ॥ ४१॥ नागकन्या देवकन्या गन्धर्वी किन्नरेश्वरी । मोहरात्री महारात्री
दारुणा भासुराम्बरा ॥ ४२॥ विद्याधरी वसुमती यक्षिणी योगिनी जरा । राक्षसी
डाकिनी वेदमयी वेदविभूषणा ॥ ४३॥ श्रुतिः स्मृतिर्महाविद्या गुह्यविद्या पुरातनी ।
चिन्त्याऽचिन्त्या स्वधा स्वाहा निद्रा तन्द्रा च पार्वती ॥ ४४॥ अपर्णा निश्चला लोला
सर्वविद्या तपस्विनी । गङ्गा काशी शची सीता सती सत्यपरायणा ॥ ४५॥
नीतिस्सुनीतिस्सुरुचिस्तुष्टिः पुष्टिर्धृतिः क्षमा । वाणी
बुद्धिर्महालक्ष्मीर्लक्ष्मीर्नीलसरस्वती ॥ ४६॥ स्रोतस्वती सरस्वती मातङ्गी विजया
जया । नदी सिन्धुः सर्वमयी तारा शून्यनिवासिनी ॥ ४७॥ शुद्धा तरङ्गिणी मेधा
लाकिनी बहुरूपिणी । स्थूला सूक्ष्मा सूक्ष्मतरा भगवत्यनुरूपिणी ॥ ४८॥
परमाणुस्वरूपा च चिदानन्दस्वरूपिणी । सदानन्दमयी सत्या सर्वानन्दस्वरूपिणी ॥

४९॥ सुनन्दा नन्दिनी स्तुत्या स्तवनीयस्वभाविनी । रङ्गिणी टङ्किनी चित्रा विचित्रा चित्ररूपिणी ॥ ५०॥ पद्मा पद्मालया पद्ममुखी पद्मविभूषणा । डाकिनी शाकिनी क्षान्ता राकिणी रुधिरप्रिया ॥ ५१॥ भ्रान्तिर्भवानी रुद्राणी मृडानी शत्रुमर्दिनी । उपेन्द्राणी महेन्द्राणी ज्योत्स्ना चन्द्रस्वरूपिणी ॥ ५२॥ सूर्यात्मिका रुद्रपत्नी रौद्री स्त्री प्रकृतिः पुमान् । शक्तिर्मुक्तिर्मतिर्माता भक्तिर्मुक्तिः पतिव्रता ॥ ५३॥ सर्वेश्वरी सर्वमाता शर्वाणी हरवल्लभा । सर्वज्ञा सिद्धिदा सिद्धा भव्या भाव्या भयापहा ॥ ५४॥ कर्त्री हर्त्री पालयित्री शर्वरी तामसी दया । तमिस्रा तामसी स्थाणुः स्थिरा धीरा तपस्विनी ॥ ५५॥ चार्वङ्गी चञ्चला लोलजिह्वा चारुचरित्रिणी । त्रपा त्रपावती लज्जा विलज्जा ह्रयौवती ॥ ५६॥ ह्री रजोवती सत्यवती धर्मनिष्ठा श्रेष्ठा निष्ठुरवादिनी । गरिष्ठा दुष्टसंहर्त्री विशिष्टा श्रेयसी घृणा ॥ ५७॥ भीमा भयानका भीमनादिनी भीः प्रभावती । वागीश्वरी श्रीर्यमुना यज्ञकर्त्री यजुःप्रिया ॥ ५८॥ ऋक्सामाथर्वनिलया रागिणी शोभना सुरा । शोभनस्वरा कलकण्ठी कम्बुकण्ठी वेणुवीणापरायणा ॥ ५९॥ वंशिनी वैष्णवी स्वच्छा धात्री त्रिजगदीश्वरी । मधुमती कुण्डलिनी ऋद्धिः शुद्धिः शुचिस्मिता ॥ ६०॥

रम्भोर्वशी रती रामा रोहिणी रेवती मखा । शङ्खिनी चक्रिणी कृष्णा गदिनी पद्मिनी तथा ॥ ६१॥ शूलिनी परिघास्त्रा च पाशिनी शाङ्र्गपाणिनी । पिनाकधारिणी धूम्रा सुरभी वनमालिनी ॥ ६२॥ रथिनी समरप्रीता वेगिनी रणपण्डिता । जटिनी वज्रिणी नीला लावण्याम्बुदचन्द्रिका ॥ ६३॥ बलिप्रिया सदापूज्या दैत्येन्द्रमथिनी तथा । महिषासुरसंहर्त्री कामिनी रक्तदन्तिका ॥ ६४॥ रक्तपा रुधिराक्ताङ्गी रक्तखर्परधारिणी । रक्तप्रिया मांसरुचिर्वासवासक्तमानसा ॥ ६५॥ गलच्छोणितमुण्डाली कण्ठमालाविभूषणा । शवासना चितान्तस्था महेशी वृषवाहिनी ॥ ६६॥ व्याघ्रत्वगम्बरा चीनचैलिनी सिंहवाहिनी । वामदेवी महादेवी गौरी सर्वज्ञभामिनी ॥ ६७॥ बालिका तरुणी वृद्धा वृद्धमाता जरातुरा । सुभ्रूर्विलासिनी ब्रह्मवादिनी ब्राह्मणी सती ॥ ६८॥ सुप्तवती चित्रलेखा लोपामुद्रा सुरेश्वरी । अमोघाऽरुन्धती तीक्ष्णा भोगवत्यनुरागिणी ॥ ६९॥ मन्दाकिनी मन्दहासा ज्वालामुख्यऽसुरान्तका । ज्वालामुखी असुरान्तका मानदा मानिनी मान्या माननीया मदातुरा ॥ ७०॥ मदिरामेदुरोन्मादा मेध्या साध्या प्रसादिनी । सुमध्याऽनन्तगुणिनी

सर्वलोकोत्तमोत्तमा ॥ ७१॥ जयदा जित्वरी जैत्री जयश्रीर्जयशालिनी । सुखदा शुभदा सत्या सभासङ्क्षोभकारिणी ॥ ७२॥ शिवदूती भूतिमती विभूतिर्भूषणानना । कौमारी कुलजा कुन्ती कुलस्त्री कुलपालिका ॥ ७३॥ कीर्तिर्यशस्विनी भूषा भूष्ठा भूतपतिप्रिया । सुगुणा निर्गुणाऽधिष्ठा निष्ठा काष्ठा प्रकाशिनी ॥ ७४॥ प्रतिष्ठिता धनिष्ठा धनदा धान्या वसुधा सुप्रकाशिनी । उर्वी गुर्वी गुरुश्रेष्ठा षड्गुणा त्रिगुणात्मिका ॥ ७५॥ राज्ञामाज्ञा महाप्राज्ञा सुगुणा निर्गुणात्मिका । महाकुलीना निष्कामा सकामा कामजीवना ॥ ७६॥ कामदेवकला रामाऽभिरामा शिवनर्तकी । चिन्तामणिः कल्पलता जाग्रती दीनवत्सला ॥ ७७॥ कार्तिकी कृत्तिका कृत्या अयोध्या विषमा समा । सुमन्त्रा मन्त्रिणी घूर्णा ह्लादिनी क्लेशनाशिनी ॥ ७८॥ त्रैलोक्यजननी हृष्टा निर्मांसामलरूपिणी । तडागनिम्नजठरा शुष्कमांसास्थिमालिनी ॥ ७९॥ अवन्ती मधुरा हृद्या त्रैलोक्यापावनक्षमा । व्यक्ताऽव्यक्ताऽनेकमूर्ती शारभी भीमनादिनी ॥ ८०॥ क्षेमङ्करी शाङ्करी च सर्वसम्मोहकारिणी । ऊद्ध्र्वतेजस्विनी क्लिन्ना महातेजस्विनी तथा ॥ ८१॥ अद्वैता योगिनी पूज्या सुरभी सर्वमङ्गला । सर्वप्रियङ्करी भोग्या धनिनी

पिशिताशना ॥ ८२॥ भयङ्करी पापहरा निष्कलङ्का वशङ्करी । आशा तृष्णा चन्द्रकला निद्राणा वायुवेगिनी ॥ ८३॥ सहस्रसूर्यसङ्काशा चन्द्रकोटिसमप्रभा । निशुम्भशुम्भसंहर्त्री रक्तबीजविनाशिनी ॥ ८४॥ मधुकैटभसंहर्त्री महिषासुरघातिनी । वह्निमण्डलमध्यस्था सर्वसत्त्वप्रतिष्ठिता ॥ ८५॥ सर्वाचारवती सर्वदेवकन्याधिदेवता । दक्षकन्या दक्षयज्ञनाशिनी दुर्गतारिणी ॥ ८६॥ इज्या पूज्या विभा भूतिः सत्कीर्तिर्ब्रह्मचारिणी । रम्भोरूश्चतुरा राका जयन्ती वरुणा कुहूः ॥ ८७॥ मनस्विनी देवमाता यशस्या ब्रह्मवादिनी । सिद्धिदा वृद्धिदा वृद्धिः सर्वाद्या सर्वदायिनी ॥ ८८॥ आधाररूपिणी ध्येया मूलाधारनिवासिनी । आज्ञा प्रज्ञा पूर्णमना चन्द्रमुख्यनुकूलिनी ॥ ८९॥ वावदूका निम्ननाभिः सत्यसन्धा दृढव्रता । आन्वीक्षिकी दण्डनीतिस्त्रयी त्रिदिवसुन्दरी ॥ ९०॥ ज्वालिनी ज्वलिनी शैलतनया विन्ध्यवासिनी । प्रत्यया खेचरी धैर्या तुरीया विमलाऽऽतुरा ॥ ९१॥ प्रगल्भा वारुणी क्षामा दर्शिनी विस्फुलिङ्गिनी । भक्तिः सिद्धिः सदाप्राप्तिः प्रकाम्या महिमाऽणिमा ॥ ९२॥ ईक्षासिद्धिर्वशित्वा च ईशित्वोर्ध्वनिवासिनी । लघिमा चैव सावित्री गायत्री भुवनेश्वरी ॥ ९३॥ मनोहरा

चिता दिव्या देव्युदारा मनोरमा । पिङ्गला कपिला जिह्वा रसज्ञा रसिका रसा ॥
९४॥ सुषुम्नेडा योगवती गान्धारी नवकान्तका । पाञ्चाली रुक्मिणी राधा राध्या भामा
च राधिका ॥ ९५॥ अमृता तुलसी वृन्दा कैटभी कपटेश्वरी । उग्रचण्डेश्वरी वीरजननी
वीरसुन्दरी ॥ ९६॥ उग्रतारा यशोदाख्या देवकी देवमानिता । निरञ्जना चित्रदेवी
क्रोधिनी कुलदीपिका ॥ ९७॥ कुलरागीश्वरी ज्वाला मात्रिका द्राविणी द्रवा । योगीश्वरी
महामारी भ्रामरी बिन्दुरूपिणी ॥ ९८॥ दूती प्राणेश्वरी गुप्ता बहुला डामरी प्रभा ।
कुब्जिका ज्ञानिनी ज्येष्ठा भुशुण्डी प्रकटाकृतिः ॥ ९९॥ द्राविणी गोपिनी माया
कामबीजेश्वरी प्रिया । शाकम्भरी कोकनदा सुसत्या च तिलोत्तमा ॥ १००॥ अमेया
विक्रमा क्रूरा सम्यक्छीला त्रिविक्रमा । स्वस्तिर्हव्यवहा प्रीतिरुक्मा धूम्रार्चिरङ्गदा ॥
१०१॥ तपिनी तापिनी विश्वभोगदा धारिणी धरा । त्रिखण्डा रोधिनी वश्या सकला
शब्दरूपिणी ॥ १०२॥ बीजरूपा महामुद्रा वशिनी योगरूपिणी ।
अनङ्गकुसुमाऽनङ्गमेखलाऽनङ्गरूपिणी ॥ १०३॥
अनङ्गमदनाऽनङ्गरेखाऽनङ्गकुशेश्वरी । अनङ्गमालिनी कामेश्वरी सर्वार्थसाधिका ॥

१०४॥ सर्वतन्त्रमयी सर्वमोदिन्यानन्दरूपिणी । वज्रेश्वरी च जयिनी सर्वदुःखक्षयङ्करी ॥ १०५॥ व्रजेश्वरी षडङ्गयुवती योगेयुक्ता ज्वालांशुमालिनी । दुराशया दुराधारा दुर्जया दुर्गरूपिणी ॥ १०६॥ दुरन्ता दुष्कृतिहरा दुर्ध्येया दुरतिक्रमा । हंसेश्वरी त्रिलोकस्था शाकम्भर्यनुरागिणी ॥ १०७॥ त्रिकोणनिलया नित्या परमामृतरञ्जिता । महाविद्येश्वरी श्वेता भेरुण्डा कुलसुन्दरी ॥ १०८॥ त्वरिता भक्तिसंयुक्ता भक्तिवश्या सनातनी । भक्तानन्दमयी भक्तभाविता भक्तशङ्करी ॥ १०९॥ सर्वसौन्दर्यनिलया सर्वसौभाग्यशालिनी । सर्वसम्भोगभवना सर्वसौख्यानुरूपिणी ॥ ११०॥ कुमारीपूजनरता कुमारीव्रतचारिणी । कुमारीभक्तिसुखिनी कुमारीरूपधारिणी ॥ १११॥ कुमारीपूजकप्रीता कुमारीप्रीतिदप्रिया । कुमारीसेवकासङ्गा कुमारीसेवकालया ॥ ११२॥ आनन्दभैरवी बालभैरवी बटुभैरवी । श्मशानभैरवी कालभैरवी पुरभैरवी ॥ ११३॥ महाभैरवपत्नी च परमानन्दभैरवी । सुरानन्दभैरवी च उन्मादानन्दभैरवी ॥ ११४॥ यज्ञानन्दभैरवी च तथा तरुणभैरवी । ज्ञानानन्दभैरवी च अमृतानन्दभैरवी ॥ ११५॥ महाभयङ्करी तीव्रा तीव्रवेगा तरस्विनी । त्रिपुरा परमेशानी सुन्दरी पुरसुन्दरी

॥ ११६॥ त्रिपुरेशी पञ्चदशी पञ्चमी पुरवासिनी । महासप्तदशी चैव षोडशी त्रिपुरेश्वरी
॥ ११७॥ महाङ्कुशस्वरूपा च महाचक्रेश्वरी तथा । नवचक्रेश्वरी चक्रेश्वरी
त्रिपुरमालिनी ॥ ११८॥ राजचक्रेश्वरी राज्ञी महात्रिपुरसुन्दरी । सिन्दूरपूररुचिरा
श्रीमत्त्रिपुरसुन्दरी ॥ ११९॥ सर्वाङ्गसुन्दरी रक्तारक्तवस्त्रोत्तरीयका ।
यवायावकसिन्दूररक्तचन्दनधारिणी ॥ १२०॥ यवायावकसिन्दूररक्तचन्दनरूपधृक् ।
चमरी बालकुटिला निर्मला श्यामकेशिनी ॥ १२१॥ वज्रमौक्तिकरत्नाढ्या
किरीटकुण्डलोज्ज्वला । रत्नकुण्डलसंयुक्ता स्फुरद्गण्डमनोरमा ॥ १२२॥
कुञ्जरेश्वरकुम्भोत्थमुक्तारञ्जितनासिका । मुक्ताविद्रुममाणिक्यहाराद्यस्तनमण्डला ॥
१२३॥ सूर्यकान्तेन्दुकान्ताढ्या स्पर्शाश्मगलभूषणा ।
बीजपूरस्फुरद्बीजदन्तपङ्क्तिरनुत्तमा ॥ १२४॥ कामकोदण्डकाभुग्नभ्रूकटाक्षप्रवर्षिणी ।
ब्हुग्र चुर्वेद् मातङ्गकुम्भवक्षोजा लसत्कनकदक्षिणा ॥ १२५॥ मनोज्ञशष्कुलीकर्णा
हंसीगतिविडम्बिनी । पद्मरागाङ्गदद्योतद्दोश्चतुष्कप्रकाशिनी ॥ १२६॥
कर्पूरागरुकस्तूरीकुङ्कुमद्रवलेपिता । विचित्ररत्नपृथिवीकल्पशाखितलस्थिता ॥ १२७॥

रत्नदीपस्फुरद्रत्नसिंहासननिवासिनी । षट्चक्रभेदनकरी परमानन्दरूपिणी ॥ १२८॥ सहस्रदलपद्मान्ता चन्द्रमण्डलवर्तिनी । ब्रह्मरूपा शिवक्रोडा नानासुखविलासिनी ॥ १२९॥ हरविष्णुविरिञ्चेन्द्रग्रहनायकसेविता । शिवा शैवा च रुद्राणी तथैव शिवनादिनी ॥ १३०॥ महादेवप्रिया देवी तथैवानङ्गमेखला । डाकिनी योगिनी चैव तथोपयोगिनी मता ॥ १३१॥ माहेश्वरी वैष्णवी च भ्रामरी शिवरूपिणी । अलम्बुसा भोगवती क्रोधरूपा सुमेखला ॥ १३२॥ गान्धारी हस्तिजिह्वा च इडा चैव शुभङ्करी । पिङ्गला दक्षसूत्री च सुषुम्ना चैव गान्धिनी ॥ १३३॥ भगात्मिका भगाधारा भगेशी भगरूपिणी । लिङ्गाख्या चैव कामेशी त्रिपुरा भैरवी तथा ॥ १३४॥ लिङ्गगीतिस्सुगीतिश्च लिङ्गस्था लिङ्गरूपधृक् । लिङ्गमाला लिङ्गभवा लिङ्गालिङ्गा च पावकी ॥ १३५॥ भगवती कौशिकी च प्रेमरूपा प्रियंवदा । गृध्ररूपी शिवारूपा चक्रेशी चक्ररूपधृक् ॥ १३६॥ दृध्र आत्मयोनिर्ब्रह्मयोनिर्जगद्योनिरयोनिजा । भगरूपा भगस्थात्री भगिनी भगमालिनी ॥ १३७॥ भगात्मिका भगाधारा रूपिणी भगशालिनी । लिङ्गाभिधायिनी लिङ्गप्रिया लिङ्गनिवासिनी ॥ १३८॥ लिङ्गस्था लिङ्गिनी

लिङ्गरूपिणी लिङ्गसुन्दरी । लिङ्गगीतिर्महाप्रीतिर्भगगीतिर्महासुखा ॥ १३९॥
लिङ्गनामसदानन्दा भगनामसदारतिः । भगनामसदानन्दा लिङ्गनामसदारतिः ॥
१४०॥ लिङ्गमालकराभूषा भगमालाविभूषणा । भगलिङ्गामृतवृता
भगलिङ्गामृतात्मिका ॥ १४१॥ भगलिङ्गार्चनप्रीता भगलिङ्गस्वरूपिणी ।
भगलिङ्गस्वरूपा च भगलिङ्गसुखावहा ॥ १४२॥ स्वयम्भूकुसुमप्रीता
स्वयम्भूकुसुमार्चिता । स्वयम्भूकुसुमप्राणा स्वयम्भूकुसुमोत्थिता ॥ १४३॥
स्वयम्भूकुसुमस्नाता स्वयम्भूपुष्पतर्पिता । स्वयम्भूपुष्पघटिता स्वयम्भूपुष्पधारिणी ॥
१४४॥ स्वयम्भूपुष्पतिलका स्वयम्भूपुष्पचर्चिता । स्वयम्भूपुष्पनिरता
स्वयम्भूकुसुमाग्रहा ॥ १४५॥ स्वयम्भूपुष्पयज्ञेशा स्वयम्भूकुसुमालिका । यज्ञाशा
यज्ञाङ्गा स्वयम्भूपुष्पनिचिता स्वयम्भूकुसुमार्चिता ॥ १४६॥ कुसुमप्रिया
स्वयम्भूकुसुमादानलालसोन्मत्तमानसा । स्वयम्भूकुसुमानन्दलहरी स्निग्धदेहिनी ॥
१४७॥ स्वयम्भूकुसुमाधारा स्वयम्भूकुसुमाकुला । स्वयम्भूपुष्पनिलया
स्वयम्भूपुष्पवासिनी ॥ १४८॥ स्वयम्भूकुसुमास्निग्धा स्वयम्भूकुसुमात्मिका ।

स्वयम्भूपुष्पकरिणी स्वयम्भूपुष्पमालिका ॥ १४९॥ स्वयम्भूकुसुमन्यासा
स्वयम्भूकुसुमप्रभा । स्वयम्भूकुसुमज्ञाना स्वयम्भूपुष्पभोगिनी ॥ १५०॥
स्वयम्भूकुसुमोल्लासा स्वयम्भूपुष्पवर्षिणी । स्वयम्भूकुसुमानन्दा स्वयम्भूपुष्पपुष्पिणी
॥ १५१॥ स्वयम्भूकुसुमोत्साहा स्वयम्भूपुष्परूपिणी । स्वयम्भूकुसुमोन्मादा
स्वयम्भूपुष्पसुन्दरी ॥ १५२॥ स्वयम्भूकुसुमाराध्या स्वयम्भूकुसुमोद्भवा ।
स्वयम्भूकुसुमाव्यग्रा स्वयम्भूपुष्पपूर्णिता ॥ १५३॥ स्वयम्भूपूजकप्राज्ञा
स्वयम्भूहोतृमात्रिका । स्वयम्भूदातृरक्षित्री स्वयम्भूभक्तभाविका ॥ १५४॥
स्वयम्भूकुसुमप्रीता स्वयम्भूपूजकप्रिया । स्वयम्भूवन्दकाधारा स्वयम्भूनिन्दकान्तका ॥
१५५॥ स्वयम्भूप्रदसर्वस्वा स्वयम्भूप्रदपुत्रिणी । स्वयम्भूप्रदसस्मेरा स्वयम्भूतशरीरिणी
॥ १५६॥ सर्वलोकोद्भवप्रीता सर्वकालोद्भवात्मिका । सर्वकालोद्भवोद्भावा
सर्वकालोद्भवोद्भवा ॥ १५७॥ कुन्दपुष्पसमाप्रीतिः कुन्दपुष्पसमारतिः ।
कुन्दगोलोद्भवप्रीता कुन्दगोलोद्भवात्मिका ॥ १५८॥ स्वयम्भूर्वा शिवा शक्ता पाविनी
लोकपाविनी । कीर्तिर्यशस्विनी मेधा विमेधा सुरसुन्दरी ॥ १५९॥ अश्विनी कृत्तिका

पुष्या तेजस्वी चन्द्रमण्डला । सूक्ष्मा सूक्ष्मप्रदा सूक्ष्मासूक्ष्मभयविनाशिनी ॥ १६०॥ वरदाऽभयदा चैव मुक्तिबन्धविनाशिनी । कामुकी कामदा क्षान्ता कामाख्या कुलसुन्दरी ॥ १६१॥ सुखदा दुःखदा मोक्षा मोक्षदार्थप्रकाशिनी । दुष्टादुष्टमती चैव सर्वकार्यविनाशिनी ॥ १६२॥ शुक्रधारा शुक्ररूपा शुक्रसिन्धुनिवासिनी । शुक्रालया शुक्रभोगा शुक्रपूजा सदारतिः ॥ १६३॥ शुक्रपूज्या शुक्रहोमसन्तुष्टा शुक्रवत्सला । शुक्रमूर्तिः शुक्रदेहा शुक्रपूजकपुत्रिणी ॥ १६४॥ शुक्रस्था शुक्रिणी शुक्रसंस्पृहा शुक्रसुन्दरी । शुक्रस्नाता शुक्रकरी शुक्रसेव्यातिशुक्रिणी ॥ १६५॥ महाशुक्रा शुक्रभवा शुक्रवृष्टिविधायिनी । शुक्राभिधेया शुक्रार्हा शुक्रवन्दकवन्दिता ॥ १६६॥ शुक्रानन्दकरी शुक्रसदानन्दविधायिनी । शुक्रोत्साहा सदाशुक्रपूर्णा शुक्रमनोरमा ॥ १६७॥ शुक्रपूजकसर्वस्था शुक्रनिन्दकनाशिनी । शुक्रात्मिका शुक्रसम्पच्छुक्राकर्षणकारिणी ॥ १६८॥ रक्ताशया रक्तभोगा रक्तपूजासदारतिः । रक्तपूज्या रक्तहोमा रक्तस्था रक्तवत्सला ॥ १६९॥ रक्तपूर्णा रक्तदेहा रक्तपूजकपुत्रिणी । रक्ताख्या रक्तिनी रक्तसंस्पृहा रक्तसुन्दरी ॥ १७०॥ रक्ताभिदेहा रक्तार्हा रक्तवन्दकवन्दिता । महारक्ता

रक्तभवा रक्तवृष्टिविधायिनी ॥ १७१॥ रक्तस्नाता रक्तप्रीता रक्तसेव्यातिरक्तिनी ।
रक्तानन्दकरी रक्तसदानन्दविधायिनी ॥ १७२॥ रक्तारक्ता रक्तपूर्णा रक्तसेव्यक्षिणीरमा
। रक्तसेव्या मनोरमा रक्तसेवकसर्वस्वा रक्तनिन्दकनाशिनी ॥ १७३॥ रक्तात्मिका
रक्तरूपा रक्ताकर्षणकारिणी । रक्तोत्साहा रक्तव्यग्रा रक्तपानपरायणा ॥ १७४॥
रक्तोत्साहा रक्ताढ्या शोणितानन्दजननी कल्लोलस्निग्धरूपिणी । साधकान्तर्गता देवी
पार्वती पापनाशिनी ॥ १७५॥ साधूनां हृदिसंस्थात्री साधकानन्दकारिणी । साधकानां
च जननी साधकप्रियकारिणी ॥ १७६॥ साधकप्रचुरानन्दसम्पत्तिसुखदायिनी । साधका
साधकप्राणा साधकासक्तमानसा ॥ १७७॥ शारदा साधकोत्तमसर्वस्वासाधका
भक्तरक्तपा । भक्तवत्सला साधकानन्दसन्तोषा साधकारिविनाशिनी ॥ १७८॥
आत्मविद्या ब्रह्मविद्या परब्रह्मकुटुम्बिनी । त्रिकूटस्था पञ्चकूटा सर्वकूटशरीरिणी ॥
१७९॥ सर्ववर्णमयी वर्णजपमालाविधायिनी । इति श्रीकालिकानाम्नां सहस्रं
शिवभाषितम् ॥ १८०॥ फलश्रुतिः गुह्यात् गुह्यतरं साक्षान्महापातकनाशनम् ।
पूजाकाले निशीथे च सन्ध्ययोरुभयोरपि ॥ १॥ लभते गाणपत्यं स यः पठेत्साधकोत्तमः

। यः पठेत्पाठयेद्वापि शृणोति श्रावयेदपि ॥ २॥ सर्वपापविनिर्मुक्तः स याति कालिकापदम् । श्रद्धयाऽश्रद्धया वापि यः कश्चिन्मानवः पठेत् ॥ ३॥ दुर्गाद्दुर्गतरं तीर्त्वा स याति कालिकापदम् । वन्ध्या वा काकवन्ध्या वा मृतपुत्रा च याङ्गना ॥ ४॥ श्रुत्वा स्तोत्रमिदं पुत्रान् लभते चिरजीविनः । यं यं कामयते कामं पठन् स्तोत्रमनुत्तमम् ॥ ५॥ देवीवरप्रदानेन तं तं प्राप्नोति नित्यशः । स्वयम्भूकुसुमैः शुक्लैः सुगन्धिकुसुमान्वितैः ॥ ६॥ गुरुविष्णुमहेशानामभेदेन महेश्वरी । समन्ताद्भावयेन्मन्त्री महेशो नात्र संशयः ॥ ७॥ स शाक्तः शिवभक्तश्च स एव वैष्णवोत्तमः । सम्पूज्य स्तौति यः कालीमद्वैतभावमावहन् ॥ ८॥ देव्यानन्देन सानन्दो देवीभक्त्यैकभक्तिमान् । स एव धन्यो यस्यार्थे महेशो व्यग्रमानसः ॥ ९॥ कामयित्वा यथाकामं स्तवमेनमुदीरयेत् । सर्वरोगैः परित्यक्तो जायते मदनोपमः ॥ १०॥ चक्रं वा स्तवमेनं वा धारयेदङ्गसङ्गतम् । विलिख्य विधिवत्साधुः स एव कालिकातनुः ॥ ११॥ देव्यै निवेदितं यद्यत्तस्यांशं भक्षयेन्नरः । दिव्यदेहधरो भूत्वा देव्याः पार्श्वधरो भवेत् ॥ १२॥ नैवेद्यनिन्दकं दृष्ट्वा नृत्यन्ति योगिनीगणाः । रक्तपानोद्यतास्सर्वा

मांसास्थिचर्वणोद्यताः ॥ १३॥ तस्मान्निवेदितं देव्यै दृष्ट्वा श्रुत्वा च मानवः । न निन्देन्मनसा वाचा कुष्ठव्याधिपराङ्मुखः ॥ १४॥ आत्मानं कालिकात्मानं भावयन् स्तौति यः शिवाम् । शिवोपमं गुरुं ध्यात्वा स एव श्रीसदाशिवः ॥ १५॥ यस्यालये तिष्ठति नूनमेतत्स्तोत्रं भवान्या लिखितं विधिज्ञैः । गोरोचनालक्तककुङ्कुमाक्तकर्पूरसिन्दूरमधुद्रवेण ॥ १६॥ न तत्र चोरस्य भयं न हास्यो न वैरिभिर्नाऽशनिवह्निभीतिः । उत्पातवायोरपि नाऽत्रशङ्का लक्ष्मीः स्वयं तत्र वसेदलोला ॥ १७॥ स्तोत्रं पठेत्तदनन्तपुण्यं देवीपदाम्भोजपरो मनुष्यः । विधानपूजाफलमेव सम्यक् प्राप्नोति सम्पूर्णमनोरथोऽसौ ॥ १८॥ मुक्ताः श्रीचरणारविन्दनिरताः स्वर्गामिनो भोगिनो ब्रह्मोपेन्द्रशिवात्मकार्चनरता लोकेऽपि संलेभिरे । श्रीमच्छङ्करभक्तिपूर्वकमहादेवीपदध्यायिनो मुक्तिर्भुक्तिमतिः स्वयं स्तुतिपराभक्तिः करस्थायिनी ॥ १९॥ इति श्रीकालिकाकुलसर्वस्वे हरपरशुरामसंवादे श्रीकालिकासहस्रनामस्तोत्रं सम्पूर्णम् ॥

॥श्रीभवानीसहस्रनामस्तोत्रम् ॥ श्रीगणेशाय नमः । कैलास शिखरे रम्ये देवदेवं महेश्वरम् । ध्यानोपरतमासीनं प्रसन्नमुखपङ्कजम् ॥ १॥ सुरासुरशिरोरत्नरञ्जिताङ्घ्रियुगं प्रभुम् । प्रणम्य शिरसा नन्दी बद्धाञ्जलिरभाषत ॥ २॥ श्रीनन्दिकेश्वर उवाच । देवदेव जगन्नाथ संशयोऽस्ति महान्मम । रहस्यमेकमिच्छामि प्रष्टुं त्वां भक्तवत्सल ॥ ३॥ देवतायास्त्वया कस्याः स्तोत्रमेतद्दिवानिशम् । पठ्यते निरतं नाथ त्वत्तः किमपरं महत् ॥ ४॥ इति पृष्टस्तदा देवो नन्दिकेन जगद्गुरुः । प्रोवाच भगवानीशो विकसन्नेत्रपङ्कजः ॥ ५॥ ईश्वर उवाच । साधु साधु गुणश्रेष्ठ पृष्टवानसि मां च यत् । स्कन्दस्यापि च यद्गोप्यं रहस्यं कथयामि तत् ॥ ६॥ पुरा कल्पक्षये लोकान्सिसृक्षुर्मूढचेतनः । गुणत्रयमयी शक्तिर्मूलप्रकृतिसंज्ञिता ॥ ७॥ तस्यामहं समुत्पन्नस्तत्वैस्तैर्महदादिभिः । चेतनेति ततः शक्तिर्मां काप्यालिङ्ग्य तस्थुषी ॥ ८॥ हेतुस्सङ्कल्पजालस्य मनोधिष्ठायिनी शुभा । इच्छेति परमा शक्तिरुन्मिलति ततः परम् ॥ ९॥ ततो वागिति विख्याता शक्तिः शब्दमयी पुरा । प्रादुरासीज्जगन्माता वेदमाता सरस्वती ॥ १०॥ ब्राह्मी च वैष्णवी सैन्द्री कौमारी पार्वती शिवा । सिद्धिदा बुद्धिदा

शान्ता सर्वमङ्गलदायिनी ॥ ११॥ तयैतत्सृज्यते विश्वमनाधारं च धार्यते ।
तयैतत्पाल्यते सर्वं तस्यामेव प्रलीयते ॥ १२॥ अर्चिता प्रणता ध्याता सर्वभावविनिश्चतैः
। आराधिता स्तुता सैव सर्वसिद्धिप्रदायिनी ॥ १३॥ तस्याश्चानुग्रहादेव तामेव
स्तुतवानहम् । सहस्रैर्नामभिर्दिव्यैस्त्रैलोक्य प्रणिपूजितैः ॥ १४॥ स्तवेनानेन सन्तुष्टा
मामेव प्रतिवेश सा । तदारभ्य मया प्राप्तमैश्वर्यं पदमुत्तमम् ॥ १५॥ तत्प्रभावान्मया सृष्टं
जगदेतच्चराचरम् । ससुरासुरगन्धर्वयक्षराक्षसमानवम् ॥ १६॥ सपन्नगं साब्धिकं च
सशैलवनकाननम् । सराशिग्रहनक्षत्रं पञ्चभूतगुणान्वितम् ॥ १७॥ नन्दिन्नाम सहस्रेण
स्तवेनानेन सर्वदा । स्तौम्यहं परापराशक्तिं ममानुग्रहकारिणीम् ॥ १८॥ इत्युक्त्वोपरतं
देवं चराचरगुरुं विभुम् । प्रणम्य शिरसा नन्दी प्रोवाच परमेश्वरम् ॥ १९॥
श्रीनन्दिकेश्वर उवाच । भगवन्देवदेवेश लोकनाथ जगत्पते । भक्तोऽस्मि तव दासोऽस्मि
प्रसादः क्रियतां मयि ॥ २०॥ देव्याः स्तवमिदं पुण्यं दुर्लभं यत्सुरैरपि । श्रोतुमिच्छाम्यहं
देव प्रभावमपि चास्य तु ॥ २१॥ श्रृणु नन्दिन्महाभाग स्तवराजमिमं शुभम्

सहस्रैर्नामभिर्दिव्यैः सिद्धिदं सुखमोक्षदम् ॥ २२॥ शुचिभिः प्रातरुत्थाय पठितव्यं समाहितैः । त्रिकालं श्रद्धया युक्तैर्नातः परतरः स्तव; ॥ २३॥

ॐ अस्यश्रीभवानीनामसहस्रस्तवराजस्य, श्रीभगवान्महादेव ऋषिः ,अनुष्टुप्छन्दः, आद्या शक्तिः श्रीभगवती भवानी देवता, ह्रीं बीजं, श्रीं शक्तिः, क्लीं कीलकं, श्रीभगवतीभवानीप्रीत्यर्थे जपे विनियोगः ।
॥ अथ ध्यानम् ॥ अर्धेन्दुमौलिममलाममराभिवन्द्यामम्भोजपाशसृणिरक्तकपालहस्ताम् । रक्ताङ्गरागरसनाभरणान्त्रिनेत्रान्ध्यायेच्छिवस्यवनितां विह्वलाङ्गीम् ॥ ॐ बालार्कमण्डलाभासां चतुर्वाहुं त्रिलोचनाम् । पाशाङ्कुशशरं चापं धारयन्तीं शिवां भजे॥
ॐ महाविद्या जगन्माता महालक्ष्मीः शिवप्रिया । विष्णुमाया शुभा शान्ता सिद्धासिद्धसरस्वती ॥ १॥ क्षमा कान्तिः प्रभा ज्योत्स्ना पार्वती सर्वमङ्गला । हिङ्गुला

चण्डिका दान्ता पद्मा लक्ष्मीर्हरिप्रिया ॥ २॥ त्रिपुरा नन्दिनी नन्दा सुनन्दा सुरवन्दिता । यज्ञविद्या महामाया वेदमाता सुधाधृतिः ॥ ३॥ प्रीतिप्रदा प्रसिद्धा च मृडानी विन्ध्यवासिनी । सिद्धविद्या महाशक्तिः पृथिवी नारदसेविता ॥ ४॥ पुरुहूतप्रिया कान्ता कामिनी पद्मलोचना । प्रल्हादिनी महामाता दुर्गा दुर्गतिनाशिनी ॥ ५॥ ज्वालामुखी सुगोत्रा च ज्योतिः कुमुदवासिनी । दुर्गमा दुर्लभा विद्या स्वर्गतिः पुरवासिनी ॥ ६॥ अपर्णा शाम्बरी माया मदिरामृदुहासिनी । कुलवागीश्वरी नित्या नित्यक्लिन्ना कृशोदरी ॥ ७॥ कामेश्वरी च नीला च भिरुण्डा वह्निवासिनी । लम्बोदरी महाकाली विद्याविद्येश्वरी तथा ॥ ८॥ नरेश्वरी च सत्या च सर्वसौभाग्यवर्धिनी । सङ्कर्षिणी नारसिंही वैष्णवी च महोदरी ॥ ९॥ कात्यायनी च चम्पा च सर्वसम्पत्तिकारिणी । नारायणी महानिद्रा योगनिद्रा प्रभावती ॥ १०॥ प्रज्ञा पारमिताप्राज्ञा तारा मधुमती मधुः । क्षीरार्णवसुधाहारा कालिका सिंहवाहना ॥ ११॥ ॐकारा च सुधाकारा चेतना कोपनाकृतिः । अर्धबिन्दुधराधारा विश्वमाता कलावती ॥ १२॥ पद्मावती सुवस्त्रा च प्रबुद्धा च सरस्वती । कुण्डासना जगद्धात्री बुद्धमाता जिनेश्वरी ॥ १३॥ जिनमाता

जिनेन्द्रा च शारदा हंसवाहना । राजलक्ष्मीर्वषट्कारा सुधाकारा सुधोत्सुका ॥ १४॥
राजनीतिस्त्रयी वार्ता दण्डनीतिः क्रियावती । सद्भूतिस्तारिणी श्रद्धा सद्गतिः
सत्यपरायणा ॥ १५॥ सिन्धुर्मन्दाकिनी गङ्गा यमुना च सरस्वती । गोदावरी विपाशा
च कावेरी च शतह्रदा ॥ १६॥ सरयूश्चन्द्रभागा च कौशिकी गण्डकी शुचिः । नर्मदा
कर्मनाशा च चर्मण्वती च वेदिका ॥ १७॥ वेत्रवती वितस्ता च वरदा नरवाहना । सती
पतिव्रता साध्वी सुचक्षुः कुण्डवासिनी ॥ १८॥ एकचक्षुः सहस्राक्षी सुश्रोणिर्भगमालिनी
। सेनाश्रोणिः पताका च सुव्यूहा युद्धकांक्षिणी ॥ १९॥ पताकिनी दयारम्भा विपञ्ची
पञ्चमप्रिया । परा परकलाकान्ता त्रिशक्तिर्मोक्षदायिनी ॥ २०॥ ऐन्द्री माहेश्वरी ब्राह्मी
कौमारी कमलासना । इच्छा भगवती शक्तिः कामधेनुः कृपावती ॥ २१॥ वज्रायुधा
वज्रहस्ता चण्डी चण्डपराक्रमा । गौरी सुवर्णवर्णा च स्थितिसंहारकारिणी ॥ २२॥
एकानेका महेज्या च शत बाहुर्महाभुजा । भुजङ्गभूषणा भूषा षट्चक्राक्रमवासिनी ॥
२३॥ षट्चक्रभेदिनी श्यामा कायस्था कायवर्जिता । सुस्मिता सुमुखी क्षामा
मूलप्रकृतिरीश्वरी ॥ २४॥ अजा च बहुवर्णा च पुरुषार्थप्रर्वतिनी । रक्ता नीला सिता

श्यामा कृष्णा पीता च कर्बुरा ॥ २५॥ क्षुधा तृष्णा जरा वृद्धा तरुणी करुणालया । कला काष्ठा मुहूर्ता च निमिषा कालरूपिणी ॥ २६॥ सुवर्णरसना नासाचक्षुः स्पर्शवती रसा । गन्धप्रिया सुगन्धा च सुस्पर्शा च मनोगतिः ॥ २७॥ मृगनाभिर्मृगाक्षी च कर्पूरामोदधारिणी । पद्मयोनिः सुकेशी च सुलिङ्गा भगरूपिणी ॥ २८॥ योनिमुद्रा महामुद्रा खेचरी खगगामिनी । मधुश्रीर्माधवी वल्ली मधुमत्ता मदोद्धता ॥ २९॥ मातङ्गी शुकहस्ता च पुष्पबाणेक्षुचापिनी । रक्ताम्बरधराक्षीबा रक्तपुष्पावतंसिनी ॥ ३०॥ शुभ्राम्बरधरा धीरा महाश्वेता वसुप्रिया । सुवेणी पद्महस्ता च मुक्ताहारविभूषणा ॥ ३१॥ कर्पूरामोदनिःश्वासा पद्मिनी पद्ममन्दिरा । खड्गिनी चक्रहस्ता च भुशुण्डी परिघायुधा ॥ ३२॥ चापिनी पाशहस्ता च त्रिशूलवरधारिणी । सुबाणा शक्तिहस्ता च मयूरवरवाहना ॥ ३३॥ वरायुधधरा वीरा वीरपानमदोत्कटा । वसुधा वसुधारा च जया शाकम्भरी शिवा ॥ ३४॥ विजया च जयन्ती च सुस्तनी शत्रुनाशिनी । अन्तर्वती वेदशक्तिर्वरदा वरधारिणी ॥ ३५॥ शीतला च सुशीला च बालग्रहविनाशिनी । कौमारी च सुपर्णा च कामाख्या कामवन्दिता ॥ ३६॥ जालन्धरधरानन्ता

कामरूपनिवासिनी । कामबीजवती सत्या सत्यमार्गपरायणा ॥ ३७॥ स्थूलमार्गस्थिता सूक्ष्मा सूक्ष्मबुद्धिप्रबोधिनी । षट्कोणा च त्रिकोणा च त्रिनेत्रा त्रिपुरसुन्दरी ॥ ३८॥ वृषप्रिया वृषारूढा महिषासुरघातिनी । शुम्भदर्पहरा दीप्ता दीप्तपावकसन्निभा ॥ ३९॥ कपालभूषणा काली कपालामाल्यधारिणी । कपालकुण्डला दीर्घा शिवदूती घनध्वनिः ॥ ४०॥ सिद्धिदा बुद्धिदा नित्या सत्यमार्गप्रबोधिनी । कम्बुग्रीवावसुमती छत्रच्छाया कृतालया ॥ ४१॥ जगद्गर्भा कुण्डलिनी भुजगाकारशायिनी । प्रोल्लसत्सप्तपद्मा च नाभिनालमृणालिनी ॥ ४२॥ मूलाधारा निराकारा वह्निकुण्डकृतालया । वायुकुण्डसुखासीना निराधारा निराश्रया ॥ ४३॥ श्वासोच्छ्वासगतिर्जीवा ग्राहिणी वह्निसंश्रया । वल्लीतन्तुसमुत्थाना षड्रसा स्वादलोलुपा ॥ ४४॥ तपस्विनी तपःसिद्धि स्सप्तधा सिद्धिदायिनी । तपोनिष्ठा तपोयुक्ताः तापसी च तपःप्रिया ॥ ४५॥ सप्तधातुर्मयीर्मूतिः सप्तधात्वन्तराश्रया । देहपुष्टिर्मनःपुष्टिरन्नपुष्टिर्बलोद्धता ॥ ४६॥ औषधी वैद्यमाता च द्रव्यशक्तिप्रभाविनी । वैद्या वैद्यचिकित्सा च सुपथ्या रोगनाशिनी ॥ ४७॥ मृगया मृगमांसादा मृगत्वङ् मृगलोचना । वागुराबन्धरूपा च

बन्धरूपावधोद्धता ॥ ४८॥ बन्दी बन्दिस्तुता कारागारबन्धविमोचिनी । शृङ्खला कलहा बद्धा दृढबन्धविमोक्षिणी ॥ ४९॥ अम्बिकाम्बालिका चाम्बा स्वच्छा साधुजनार्चिता । कौलिकी कुलविद्या च सुकुला कुलपूजिता ॥ ५०॥ कालचक्रभ्रमा भ्रान्ता विभ्रमाभ्रमनाशिनी । वात्याली मेघमाला च सुवृष्टिः सस्यवर्धिनी ॥ ५१॥ अकारा च इकारा च उकारौकाररूपिणी । ह्रीङ्कार बीजरूपा च क्लीङ्काराम्बरवासिनी ॥ ५२॥ सर्वाक्षरमयीशक्तिरक्षरा वर्णमालिनी । सिन्दूरारुणवर्णा च सिन्दूरतिलकप्रिया ॥ ५३॥ वश्या च वश्यबीजा च लोकवश्यविभाविनी । नृपवश्या नृपैः सेव्या नृपवश्यकरप्रिया ॥ ५४॥ महिषा नृपमान्या च नृपान्या नृपनन्दिनी । नृपधर्ममयी धन्या धनधान्यविवर्धिनी ॥ ५५॥ चतुर्वर्णमयीमूर्तिश्चतुर्वर्णैश्च पूजिता । सर्वधर्ममयीसिद्धि श्चतुराश्रमवासिनी ॥ ५६॥ ब्राह्मणी क्षत्रिया वैश्या शूद्रा चावरवर्णजा । वेदमार्गरता यज्ञा वेदिर्विश्वविभाविनी ॥ ५७॥ अनुशस्त्रमयी विद्या वरशस्त्रास्त्रधारिणी । सुमेधा सत्यमेधा च भद्रकाल्यपराजिता ॥ ५८॥ गायत्री सत्कृतिः सन्ध्या सावित्री त्रिपदाश्रया । त्रिसन्ध्या त्रिपदी धात्री सुपर्वा

सामगायिनी ॥ ५९॥ पाञ्चाली बालिका बाला बालक्रीडा सनातनी ।
गर्भाधारधराशून्या गर्भाशयनिवासिनी ॥ ६०॥ सुरारिघातिनी कृत्या पूतना च
तिलोत्तमा । लज्जा रसवती नन्दा भवानी पापनाशिनी ॥ ६१॥ पट्टाम्बरधरा गीतिः
सुगीतिर्ज्ञानगोचरा । सप्तस्वरमयी तन्त्री षड्जमध्यमधैवता ॥ ६२॥ मूर्छना
ग्रामसंस्थाना मूर्छा सुस्थानवासिनी । अट्टाट्टहासिनी प्रेता प्रेतासननिवासिनी ॥ ६३॥
गीतनृत्यप्रिया कामा तुष्टिदा पुष्टिदा क्षमा । निष्ठा सत्यप्रिया प्राज्ञा लोलाक्षी च
सुरोत्तमा ॥ ६४॥ सविषा ज्वालिनी ज्वाला विश्वमोहार्तिनाशिनी । शतमारी महादेवी
वैष्णवी शतपत्रिका ॥ ६५॥ विषारिर्नागदमनी कुरुकुल्ल्याऽमृतोद्भवा ।
भूतभीतिहरारक्षा भूतावेशविनाशिनी ॥ ६६॥ रक्षोघ्नी राक्षसी रात्रिर्दीर्घनिद्रा
निवारिणी । चन्द्रिका चन्द्रकान्तिश्च सूर्यकान्तिर्निशाचरी ॥ ६७॥ डाकिनी शाकिनी
शिष्या हाकिनी चक्रवाकिनी । शीता शीतप्रिया स्वङ्गा सकला वनदेवता ॥ ६८॥
गुरुरूपधरा गुर्वी मृत्युर्मारी विशारदा । महामारी विनिद्रा च तन्द्रा मृत्युविनाशिनी ॥
६९॥ चन्द्रमण्डलसङ्काशा चन्द्रमण्डलवासिनी । अणिमादिगुणोपेता सुस्पृअहा

कामरूपिणी ॥ ७०॥ अष्टसिद्धिप्रदा प्रौढा दुष्टदानवघातिनी । अनादिनिधना पुष्टिश्चतुर्बाहुश्चतुर्मुखी ॥ ७१॥ चतुस्समुद्रशयना चतुर्वर्गफलप्रदा । काशपुष्पप्रतीकाशा शरत्कुमुदलोचना ॥ ७२॥ सोमसूर्याग्निनयना ब्रह्मविष्णुशिवार्चिता । कल्याणीकमला कन्या शुभा मङ्गलचण्डिका ॥ ७३॥ भूता भव्या भविष्या च शैलजा शैलवासिनी । वाममार्गरता वामा शिववामाङ्गवासिनी ॥ ७४॥ वामाचारप्रिया तुष्टिर्लोपामुद्रा प्रबोधिनी । भूतात्मा परमात्मा भूतभावविभाविनी ॥ ७५॥ मङ्गला च सुशीला च परमार्थप्रबोधिनी । दक्षिईणा दक्षिणामूर्तिः सुदीक्षा च हरिप्रसूः ॥ ७६॥ योगिनी योगयुक्ता च योगाङ्ग ध्यानशालिनी । योगपट्टधरा मुक्ता मुक्तानां परमा गतिः ॥ ७७॥ नारसं्इही सुजन्मा च त्रिवर्गफलदायिनी । धर्मदा धनदा चैव कामदा मोक्षदाद्युतिः ॥ ७८॥ साक्षिणी क्षणदा कांक्षा दक्षजा कूटरूपिणी । ऋअतुः कात्यायनी स्वच्छा सुच्छन्दा कविप्रिया ॥ ७९॥ सत्यागमा बहिःस्था च काव्यशक्तिः कवित्वदा । मीनपुत्री सती साध्वी मैनाकभगिनी तडित् ॥ ८०॥ सौदामिनी सुदामा च सुधामा धामशालिनी । सौभाग्यदायिनी द्यौश्च सुभगा द्युतिवर्धिनी ॥ ८१॥ श्रीकृत्तिवसना चैव कङ्काली

कलिनाशिनी । रक्तबीजवधोद्युक्ता सुतन्तुर्बीजसन्ततिः ॥ ८२॥ जगज्जीवा जगद्बीजा जगत्रयहितैषिणी । चामीकररुचिश्चन्द्री साक्षाद्या षोडशी कला ॥ ८३॥ यत्तत्पदानुबन्धा च यक्षिणी धनदार्चिता । चित्रिणी चित्रमाया च विचित्रा भुवनेश्वरी ॥ ८४॥ चामुण्डा मुण्डहस्ता च चण्डमुण्डवधोद्यता । अष्टम्येकादशी पूर्णा नवमी च चतुर्दशी ॥ ८५॥ उमा कलशहस्ता च पूर्णकुम्भपयोधरा । अभीरूर्भैरवी भीरू भीमा त्रिपुरभैरवी ॥ ८६॥ महाचण्डी च रौद्री च महाभैरवपूजिता । निर्मुण्डा हस्तिनीचण्डा करालदशनानना ॥ ८७॥ कराला विकराला च घोरा घुर्घुरनादिनी । रक्तदन्तोर्ध्वकेशी च बन्धूककुसुमारुणा ॥ ८८॥ कादम्बिनी विपाशा च काश्मीरी कुङ्कुमप्रिया । क्षान्तिर्बहुसुवर्णा च रतिर्बहुसुवर्णदा ॥ ८९॥ मातङ्गिनी वरारोहा मत्तमातङ्गगामिनी । हंसा हंसगतिर्हंसी हंसोज्वलशिरोरुहा ॥ ९०॥ पूर्णचन्द्रमुखी श्यामा स्मितास्या च सुकुण्डला । महिषी च लेखनी लेखा सुलेखा लेखकप्रिया ॥ ९१॥ शङ्खिनी शङ्खहस्ता च जलस्था जलदेवता । कुरुक्षेत्राऽवनिः काशी मथुरा काञ्च्यवन्तिका ॥ ९२॥ अयोध्या द्वारिका माया तीर्था तीर्थकरप्रिया । त्रिपुष्कराऽप्रमेया च कोशस्था कोशवासिनी ॥

९३॥ कौशिकी च कुशावर्ता कौशाम्बी कोशवर्धिनी । कोशदा पद्मकोशाक्षी कौसुम्भकुसुमप्रिया ॥ ९४॥ तोतला च तुलाकोटिः कूटस्था कोटराश्रया । स्वयम्भूश्च सुरूपा च स्वरूपा पुण्यवर्धिनी ॥ ९५॥ तेजस्विनी सुभिक्षा च बलदा बलदायिनी । महाकोशी महावार्ता बुद्धिः सदसदात्मिका ॥ ९६॥ महाग्रहहरा सौम्या विशोका शोकनाशिनी । सात्विकी सत्वसंस्था च राजसी च रजोवृता ॥ ९७॥ तामसी च तमोयुक्ता गुणत्रयविभाविनी । अव्यक्ता व्यक्तरूपा च वेदविद्या च शाम्भवी ॥ ९८॥ शङ्करा कल्पिनी कल्पा मनस्सङ्कल्पसन्ततिः । सर्वलोकमयी शक्तिः सर्वश्रवणगोचरा ॥ ९९॥ सर्वज्ञानवती वाञ्छा सर्वतत्त्वावबोधिका । जाग्रतिश्च सुषुप्तिश्च स्वप्नावस्था तुरीयका ॥ १००॥ सत्वरा मन्दरा गतिर्मन्दा मन्दिरा मोददायिनी । मानभूमिः पानपात्रा पानदानकरोद्यता ॥ १०१॥ आधूर्णारूणनेत्रा च किञ्चिदव्यक्तभाषिणी । आशापुरा च दीक्षा च दक्षा दीक्षितपूजिता ॥ १०२॥ नागवल्ली नागकन्या भोगिनी भोगवल्लभा । सर्वशास्त्रमयी विद्या सुस्मृतिर्धर्मवादिनी ॥ १०३॥ श्रुतिस्मृतिधरा ज्येष्ठा श्रेष्ठा पातालवासिनी । मीमांसा तर्कविद्या च सुभक्तिर्भक्तवत्सला ॥ १०४॥

सुनाभिर्यातनाजातिर्गम्भीरा भाववर्जिता । नागपाशधरामूर्तिरगाधा नागकुण्डला ॥ १०५॥ सुचक्रा चक्रमध्यस्था चक्रकोणनिवासिनी । सर्वमन्त्रमयी विद्या सर्वमन्त्राक्षरावलिः ॥ १०६॥ मधुस्त्रवास्त्रवन्ती च भ्रामरी भ्रमरालिका । मातृमण्डलमध्यस्था मातृमण्डलवासिनी ॥ १०७॥ कुमार जननी क्रूरा सुमुखी ज्वरनाशिनी । निधाना पञ्चभूतानां भवसागरतारिणी ॥ १०८॥ अक्रूरा च ग्रहावती विग्रहा ग्रहवर्जिता । रोहिणी भूमिगर्मा च कालभूः कालवर्तिनी ॥ १०९॥ कलङ्करहिता नारी चतुःषष्ठ्यभिधावती । अतीता विद्यमाना च भाविनी प्रीतिमञ्जरी ॥ ११०॥ सर्वसौख्यवतीयुक्तिराहारपरिणामिनी । जीर्णा च जीर्णवस्त्रा च नूतना नववल्लभा ॥ १११॥ अजरा च रजःप्रीता रतिरागविवर्धिनी । पञ्चवातगतिर्भिन्ना पञ्चश्लेष्माशयाधरा ॥ ११२॥ पञ्चपित्तवतीशक्तिः पञ्चस्थानविभाविनी । उदक्या च वृषस्यन्ती बहिः प्रस्त्रविणी त्र्यहा ॥ ११३॥ रजःशुक्रधरा शक्तिर्जरायुर्गर्भधारिणी । त्रिकालज्ञा त्रिलिङ्गा च त्रिमूर्तिस्त्रिपुरवासिनी ॥ ११४॥ अरागा शिवतत्त्वा च कामतत्वानुरागिणी । प्राच्यवाची प्रतीची च दिगुदीची च दिग्विदिग्दिशा ॥ ११५॥

अहङ्कृतिरहङ्कारा बाला माया बलिप्रिया । शुक्रश्रवा सामिधेनी सुश्रद्धा श्राद्धदेवता ॥ ११६॥ माता मातामही तृप्तिः पितुमाता पितामही । स्नुषा दौहित्रिणी पुत्री पौत्री नप्त्री शिशुप्रिया ॥ ११७॥ स्तनदा स्तनधारा च विश्वयोनिः स्तनन्धयी । शिशूत्सङ्गधरा दोला लोला क्रीडाभिनन्दिनी ॥ ११८॥ उर्वशी कदली केका विशिखा शिखिवर्तिनी । खट्वाङ्गधारिणी खट्व बाणपुङ्खानुवर्तिनी ॥ ११९॥ लक्ष्यप्राप्तिकरा लक्ष्यालध्या च शुभलक्षणा । वर्तिनी सुपथाचारा परिखा च खनिर्वृतिः ॥ १२०॥ प्राकारवलया वेला मर्यादा च महोदधिः । पोषिणी शोषिणी शक्तिर्दीर्घकेशी सुलोमशा ॥ १२१॥ ललिता मांसला तन्वी वेदवेदाङ्गधारिणी । नरासृक्पानमत्ता च नरमुण्डास्थिभूषणा ॥ १२२॥ अक्षक्रीडारतिः शारि शारिकाशुकभाषिणी । शाम्भरी गारुडीविद्या वारुणी वरुणार्चिता ॥ १२३॥ वाराही तुण्डहस्ता च दंष्ट्रोद्धृतवसुन्धरा । मीनमूर्तिर्धरामूर्तिः वदान्याऽप्रतिमाश्रया ॥ १२४॥ अमूर्ता निधिरूपा च शालिग्रामशिलाशुचिः । स्मृतिसंस्काररूपा च सुसंस्कारा च संस्कृतिः ॥ १२५॥ प्राकृता देशभाषा च गाथा गीतिः प्रहेलिका । इडा च पिङ्गला पिङ्गा सुषुम्ना सूर्यवाहिनी ॥

१२६॥ शशिस्रवा च तालुस्था काकिन्यमृतजीविनी । अणुरूपा बृहद्रूपा लघुरूपा गुरुस्थिता ॥ १२७॥ स्थावरा जङ्गमाचैव कृतकर्मफलप्रदा । विषयाक्रान्तदेहा च निर्विशेषा जितेन्द्रिया ॥ १२८॥ चित्स्वरूपा चिदानन्दा परब्रह्मप्रबोधिनी । निर्विकारा च निर्वैरा विरतिः सत्यवर्द्धिनी ॥ १२९॥ पुरुषाज्ञा चा भिन्ना च क्षान्तिः कैवल्यदायिनी । विविक्तसेविनी प्रज्ञा जनयित्री च बहुश्रुतिः ॥ १३०॥ निरीहा च समस्तैका सर्वलोकैकसेविता । शिवा शिवप्रिया सेव्या सेवाफलविवर्द्धिनी ॥ १३१॥ कलौ कल्किप्रिया काली दुष्टम्लेच्छविनाशिनी । प्रत्यञ्चा च धुनर्यष्टिः खड्गधारा दुरानतिः ॥ १३२॥ अश्वप्लुतिश्च वल्गा च सृणिः स्यन्मृत्युवारिणी । वीरभूर्वीरमाता च वीरसूर्वीरनन्दिनी ॥ १३३॥ जयश्रीर्जयदीक्षा च जयदा जयवर्द्धिनी । सौभाग्यसुभगाकारा सर्वसौभाग्यवर्द्धिनी ॥ १३४॥ क्षेमङ्करी क्षेमरूपा सर्त्कीत्तिः पथिदेवता । सर्वतीर्थमयीमूर्तिः सर्वदेवमयीप्रभा ॥ १३५॥ सर्वसिद्धिप्रदा शक्तिः सर्वमङ्गलमङ्गला । पुण्यं सहस्रनामेदं शिवायाः शिवभाषितम् ॥ १३६॥ यः पठेत्प्रातरुत्थाय शुचिर्भूत्वा समाहितः । यश्चापिशृणुयान्नित्यं नरो निश्चलमानसः ॥

१३७॥ एककालं द्विकालं वा त्रिकालं श्रद्धयान्वितः । सर्वदुःखविनिर्मुक्तो धनधान्यसमन्वितः ॥ १३८॥ तेजस्वी बलवाञ्छूरः शोकरोगविवर्जितः । यशस्वी कीर्तिमान्धन्यः सुभगो लोकपूजितः ॥ १३९॥ रूपवान्गुणसम्पन्नः प्रभावीर्यसमन्वितः । श्रेयांसि लभतेनित्यं निश्चलां च शुभां श्रियम् ॥ १४०॥ सर्वपापविनिर्मुक्तो लोभक्रोध विवर्जितः । नित्यं बन्धुसुतैर् दारैः पुत्रपौत्रैर्महोत्सवैः ॥ १४१॥ नन्दितः सेवितो भृत्यैर्बहुभिः शुद्धमानसैः । विद्यानां पारगो विप्रः क्षत्रियो विजयी रणे । ॥ १४२॥ वैश्यस्तुधनलाभाढ्यः शूद्रश्चसुखमेधते । पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ॥ १४३॥ इच्छाकामं तु कामार्थी धर्मार्थी धर्ममक्षयम् । कन्यार्थी लभते कन्यां रूपशीलगुणन्विताम् ॥ १४४॥ क्षेत्रं च बहुशस्यं स्याद्गावस्तु बहुदुग्धदाः । नाशुभं नापदस्तस्य न भयं नृपशत्रुभिः ॥ १४५॥ जायते ना शुभाबुद्धिर्लभते कुलधुर्यताम् । न बाधन्ते ग्रहास्तस्य न रक्षांसि न पन्नगाः ॥ १४६॥ न पिशाचो न डाकिन्यो भूतव्यन्तरजृम्भिकाः । बालग्रहाभिभूतानां बालानां शान्तिकारकम् ॥ १४७॥ द्वन्द्वानां प्रीतिभेदे च मैत्रीकरणमुत्तमम् । लोहपाशैर्दृढैर्बद्धो बद्धो वेश्मनि दुर्गमे ॥ १४८॥ तिष्ठन्

शृण्वन्पठेन्मर्त्यो मुच्यते नात्र संशयः । न दाराणां न पुत्राणां न बन्धूनां न मित्रजम् ॥ १४९॥ पश्यन्ति नहि ते शोकं हि वियोगं चिरजीविताम् । अन्धस्तु लभते दृष्टिं चक्षुरोगैर्नबाध्यते ॥ १५०॥ बधिरः श्रुतिमाप्नोति मूको वाचं शुभान्नरः । एतद्गर्भा च या नारी स्थिरगर्भा प्रजायते ॥ १५१॥ स्रावणी बद्धगर्भा च सुखमेवप्रसूयते । कुष्ठिनः शीर्णदेहा ये गतकेशनखत्वचः ॥ १५२॥ पठनाच्छ्रवणा द्वापि दिव्यकाया भवन्ति ते । ये पठन्ति शतावर्तं शुचिष्मन्तो जितेन्द्रियाः ॥ १५३॥ अपुत्राः प्राप्नुयुः पुत्रान् श्रृण्वन्तोऽपि न संशयः । महाव्याधि परिग्रस्तास्तप्ता ये विविधैर्ज्वरैः ॥ १५४॥ भूताभिषङ्ग सङ्घातैश्चार्तुथिक तृतीयकैः । अन्यैश्च दारुणैरोगैः पीड्यमानाश्च मानवाः ॥ १५५॥ गतबाधाः प्रजायन्ते मुक्तास्तेतैर्नसंशयः । श्रुतिग्रन्थधरोबालो दिव्यवादी कवीश्वरः ॥ १५६॥ पठनाच्छ्रवणाद्वापि भवत्येव न संशयः । अष्टम्यां वा चतुर्दश्यां नवम्यां चैकचेतसः ॥ १५७॥ ये पठन्ति सदाभक्त्या न ते वै दुःखभागिनः । नवरात्रं जिताहारो दृढभक्तिर्जिन्तेन्द्रियः ॥ १५८॥ चण्डिकायतने विद्वान्च्छुचिष्मान् मूर्तिसन्निधौ । एकाकी च शतावर्तं पठन्धीरश्च निर्भयः ॥ १५९॥ साक्षाद्भगवती तस्मै प्रयच्छेदीप्सितं फलम् ।

सिद्धपीठे गिरौ रम्ये सिद्धक्षेत्रे सुरालये ॥ १६०॥ पठनात्साधकस्याशु सिद्धिर्भवति वाञ्छिता । दशावर्तं पठेन्नित्यं भूमिशायी नरः शुचिः ॥ १६१॥ स्वप्ने मूर्तिमयीं देवीं वरदां सोऽपि पश्यति । आवर्तन सहस्रैर्ये पठन्ति पुरुषोत्तमाः ॥ १६२॥ ते सिद्धाः सिद्धिदा लोके शापानुग्रहणे क्षमाः । कवित्वं संस्कृतेतेषां शास्त्राणां व्याकृतौ ततः ॥ १६३॥ शक्तिः प्रोन्मील्यते शास्त्रेष्वनधीतेषु भारती । नखरागशिरोरत्नद्विगुणीकृतरोचिषः ॥ १६४॥ प्रयच्छन्तश्च सर्वस्वं सेवन्ते तान्महीश्वराः । रोचनालिखितं भूर्जे कुङ्कुमेन शुभे दिने ॥ १६५॥ धारयेद्यन्त्रितं देहे पूजयित्वा कुमारिकाम् । विप्राञ्श्च वरनारीश्च धूपैः कुसुमचन्दनैः ॥ १६६॥ क्षीरखण्डाज्य भोज्यैश्च पूजयित्वा सुभूषिताः । विधाय मातृका न्यासं अङ्गन्यास पुरस्सरम् ॥ १६७॥ भूतशुद्धि समोपैतं शृङ्खला न्यासमाचरेत् । यथावदाशासम्बद्धः साधकः प्रीति संयुतः ॥ १६८॥ मूलमन्त्रं जपेद्धीमान् परया संयुतोधिया । प्रणवं पूर्वमुद्धृत्य रमाबीजमनुस्मरन् ॥ १६९॥ माया कामौ समुच्चार्य पुनर्जायां विभावसोः । बध्नन्तिये महारक्षां बालानां च विशेषतः ॥ १७०॥ भवन्ति नृप पूज्यास्ते कीर्तिभाजो यशस्विनः । शत्रुतो न भयंतेषां

दुर्जनेभ्यो न राजतः ॥ १७१॥ न च रोगो न वै दुःख न दारिद्र्य न दुर्गतिः । महार्णवे महानद्यां स्थितेऽपि च नभीः क्वचित् ॥ १७२॥ रणे द्युते विवादे च विजयं प्राप्नुवन्ति ते । नृपाश्च वश्यतां यान्ति नृपमान्याश्च ये नराः ॥ १७३॥ सर्वत्र पूजिता लोके बहुमानपुरस्सराः । रतिरागविवृद्धाश्च विह्वलाः कामपीडिताः ॥ १७४॥ यौवनाक्रान्तदेहा स्ताः श्रयन्ते वामलोचनाः । लिखितं मूर्ध्निकण्ठे वा धारयेद्यो रणे शुचिः ॥ १७५॥ शतधायुध्यमानं तु प्रतियोद्धा न पश्यति । केतौ वा दुन्दुभौ येषां निबद्धं लिखितं रणे ॥ १७६॥ महासैन्ये परित्रस्तान्कान्दिशीकान्हतौजसः । विचेतनान्विमूढांश्च शत्रुकृत्यविवर्जितान् ॥ १७७॥ निर्जित्य शत्रुसङ्घास्ते लभन्ते विजयं ध्रुवम् । नाभिचारो ने शापश्च बाणवीरादिकीलनम् ॥ १७८॥ डाकिनी पूतनाकृत्या महामारी च शाकिनी । भूतप्रेत पिशाचाश्च रक्षांसि व्यन्तरादयः ॥ १७९॥ न विशन्ति गृहे देहे लिखितं यत्रतिष्ठति । न शस्त्रानलतोयौघैर्भयं तस्योपजायते ॥ १८०॥ दुर्वृत्तानां च पापानां बलहानिकरं परम् । मन्दुराकरिशालासु गवां गोष्ठे समाहितः ॥ १८१॥ पठेत्तद्दोषशान्त्यर्थं कूटं कपटनाशिनी । यमदूतान्न पश्यन्ति न ते

निरययातनाम् ॥ १८२॥ प्राप्नुवन्त्यक्षयं शान्तं शिवलोकं सनातनम् । सर्वबाधा सुघोराषु सर्वदुःखनिवारणम् ॥ १८३॥ सर्वमङ्गलकं स्वर्ग्यं पठितव्यं समाहितैः । श्रोतव्यं च सदा भक्त्या परं स्वस्त्ययनं महत् ॥ १८४॥ पुण्यं सहस्रनामेदमम्बाया रुद्रभाषितम् । चतुर्वर्गप्रदं सत्यं नन्दिकेन प्रकाशितम् ॥ १८५॥ नातः परतरो मन्त्रो नातः परतरः स्तवः । नातः परतरा विद्या तीर्थं नातः परात्परम् ॥ १८६॥ तेधन्याः कृतपुण्यास्ते त एव भुवि पूजिताः । एकवारं मुदा नित्यं येऽर्चयन्ति महेश्वरीम् ॥ १८७॥ देवतानां देवताया ब्रह्माद्यैर्या च पूजिता । भूयात्सा वरदा लोके साधूनां विश्वमङ्गला ॥ १८८॥ एतामेव पुराराद्यां विद्यां त्रिपुरभैरवीम् ।
त्रैलोक्यमोहिनीरूपामकार्षीद्भगवान्हरिः ॥ १८९॥ ॥ इति श्रीरुद्रयामलेतन्त्रे नन्दिकेश्वरसंवादे महाप्रभावी भवानीनामसहस्रस्तोत्रं सम्पूर्णम् ॥

॥ श्रीकालिकाष्टकम् ॥ ध्यानं ॥

गलद् रक्तमण्डावलीकण्ठमाला महाघोररावा सुदंष्ट्रा कराला । विवस्त्रा श्मशानलया मुक्तकेशी महाकालकामाकुला कालिकेयम् ॥१॥ भजे वामयुग्मे शिरोऽसिं दधाना वरं

दक्षयुग्मेऽभयं वै तथैव । सुमध्यापि तुङ्गस्तनाभारनम्रा लसद् रक्तसृक्कद्वया सुस्मितास्या ॥२॥ शवद्वन्द्वकर्णावतंसा सुकेशी लसत्प्रेतपाणिं प्रयुक्तैककाञ्ची । शवाकारमञ्चाधिरूढा शिवाभिश्चतुर्दिक्षशब्दायमानाऽभिरेजे ॥३॥ स्तुति: विरञ्च्यादिदेवास्त्रयस्ते गुणांस्त्रीन् समाराध्य कालीं प्रधाना बभूवु: । अनादिं सुरादिं मखादिं भवादिं स्वरूपं त्वदीयं न विन्दन्ति देवा: ॥४॥ जगन्मोहनीयं तु वाग्वादिनीयं सुहृत्पोषिणीशत्रुसंहारणीयम् । वचस्तम्भनीयं किमुच्चाटनीयं स्वरूपं त्वदीयं न विन्दन्ति देवा: ॥५॥ इयं स्वर्गदात्री पुन: कल्पवल्ली मनोजांस्तु कामान् यथार्थं प्रकुर्यात् । तथा ते कृतार्था भवन्तीति नित्यं स्वरूपं त्वदीयं न विन्दन्ति देवा: ॥६॥ सुरापानमत्ता सभुक्तानुरक्ता लसत्पूतचित्ते सदाविर्भवत्ते । जपध्यानपूजासुधाधौतपङ्का स्वरूपं त्वदीयं न विन्दन्ति देवा: ॥७॥ चिदान्दकन्दं हसन् मन्दमन्दं शरच्चन्द्रकोटिप्रभापुञ्जबिम्बम् । मुनीनां कवीनां हृदि द्योतयन्तं स्वरूपं त्वदीयं न विन्दन्ति देवा:॥८॥ महामेघकाली सुरक्तापि शुभ्रा कदाचिद् विचित्राकृतिर्योगमाया । न बाला न वृद्धा न कामातुरापि स्वरूपं त्वदीयं न विन्दन्ति देवा: ॥९॥ क्षमस्वापराधं

महागुप्तभावं मया लोकमध्ये प्रकाशीकृत यत् । तव ध्यानपूतेन चापल्यभावात् स्वरूपं त्वदीयं न विन्दन्ति देवा: ॥१०॥ फलश्रुति: यदि ध्यानयुक्तं पठेद् यो मनुष्य-स्तदा सर्वलोके विशालो भवेच्च । गृह चाष्टसिद्धिर्मृते चापि मुक्ति: स्वरूपं त्वदीयं न विन्दन्ति देवा: ॥११॥ ॥ इति श्रीमच्छङ्कराचार्यविरचितं श्रीकालिकाष्टकं सम्पूर्णम् ॥

अथ श्रीत्रिपुरसुन्दरी सुप्रभातम् – श्रीसेव्य-पादकमले श्रित-चन्द्र-मौले श्रीचन्द्रशेखर-यतीश्वर-पूज्यमाने। श्रीखण्ड-कन्दुककृत-स्व-शिरोवतंसे श्रीमन्महात्रिपुरसुन्दरि सुप्रभातम् ॥१॥ उत्तिष्ठ तुङ्ग-कुलपर्वत-राज-कन्ये उत्तिष्ठ भक्त-जन-दुःख-विनाश-दक्षे । उत्तिष्ठ सर्व-जगती-जननि प्रसन्ने उत्तिष्ठ हे त्रिपुरसुन्दरि सुप्रभातम् ॥२॥ उत्तिष्ठ राजत-गिरि-द्विषतो रथात् त्वं उत्तिष्ठ रत्न-खचितत् ज्वलिताच्च पीठात्। उत्तिष्ठ बन्धन-सुखं परिधूय शंभोः उत्तिष्ठ विघ्नित-तिरस्करिणीं विपाट्य ॥३॥ यत्पृष्ठभागमवलम्ब्य विभाति लक्ष्मीः यस्या वसन्ति निखिला अमराश्च देहे । स्नात्वा विशुद्धहृदया कपिला

सवत्सा सिद्धा प्रदर्शयितुमिह नस्तव विश्वरूपम् ॥४॥ आकर्ण्यतेऽद्य मदमत्त-गजेन्द्रनादः त्वं बोध्यसे प्रतिदिनं मधुरेण येन । भूपालरागमुखरा मुखवाद्यवीणा भेरीध्वनिश्च कुरुते भवतीं प्रबुद्धाम् ॥५॥ त्वां सेवितुं विविध-रत्न-सुवर्ण-रूप्य- खाद्यम्बरैः कुसुम-पत्र-फलैश्च भक्ताः । श्रद्धान्विताः जननि विस्मृत-गृह्य-बन्धाः आयान्ति भारत-निवासि-जनाः सवेगम् ॥६॥ जीवातवः सुकृतिनः श्रुतिरूपमातुः विप्राः प्रसन्न-मनसो जपितार्क-मन्त्राः । श्रीसूक्त-रुद्र-चमकाद्यवधारणाय सिद्धाः महेश-दयिते तव सुप्रभातम् ॥७॥ फालप्रकासि-तिलकाङ्क-सुवासिनीनां कर्पूर-भद्र-शिखया तव दृष्टि-दोषम् । गोष्ठी विभाति परिहर्तुमनन्यभावा हे देवि पङ्क्तिश इयं तव सुप्रभातम् ॥८॥ उग्रः सहस्र-किरणोऽपि करं समर्प्य त्वत्तेजसः पुरत एष विलज्जितः सन् ।
रक्तस्तनावुदयमेत्यगपृष्ठलीनः पद्मं त्वदास्यसहजं कुरुते प्रसन्नम् ॥९॥ नृत्यन्ति बर्हनिवहं शिखिनः प्रसार्य गायन्ति पञ्चमगतेन पिकाः स्वरेण। आस्ते तरङ्गतति-वाद्य-मृदङ्ग-नादः तौर्यत्रिकं शुभमकृत्रिममस्तु तुभ्यम् ॥१०॥ संताप-पाप-हरणे त्वयि दीक्षितायां संताप-हारि-शशि-पापहरापगाभ्याम् । कुत्रापि धूर्जटि-जटा-विपिने निलीनं

छिन्ना सरित् क्षयमुपैति विधुश्च वक्रः ॥११॥ भुक्त्वा कुचेल-पृतुकं ननु गोपबालः आकर्ण्य ते व्यरचयत् सुहृदं कुबेरम् । व्याजस्य नास्ति तव रिक्त-जनादपेक्षा निर्व्याजमेव करुणां नमते तनोषि ॥१२॥ प्राप्नोति वृद्धिमतुलां पुरुषः कटाक्षैः द्वन्द्वी ध्रुवं क्षयमुपैति न चात्र शङ्का। मित्रस्तवोषसि पदं परिसेव्य वृद्धः चन्द्रस्त्वदीय-मुखशत्रुतया विनष्टः ॥१३॥ सृष्टि-स्थिति-प्रलय-साक्षिणि विश्व-मातः स्वर्गापवर्ग-फल-दायनि शंभु-कान्ते । श्रुत्यन्तखेलिनि विपक्ष-कठोर-वज्रे भद्रे प्रसन्न-हृदये तव सुप्रभातम् ॥१४॥ मातः स्वरूपमनिशं हृदि पश्यतां ते को वा न सिद्ध्यति मनश्चिर-कांक्षितार्थः । सिद्ध्यन्ति हन्त धरणी-धन-धान्य-धाम- धी-धेनु-धैर्य-धृतयः सकलाः पुमार्थाः ॥१५॥ इति श्रीत्रिपुरसुन्दरी सुप्रभातम्

श्रीचक्रराजस्तोत्रम् ॥ प्रोक्ता पञ्चदशी विद्या महात्रिपुरसुन्दरी । श्रीमहाषोडशी प्रोक्ता महामाहेश्वरी सदा ॥ १ ॥ प्रोक्ता श्रीदक्षिणा काली महाराज्ञीति संज्ञया । लोके ख्याता महाराज्ञी नाम्ना दक्षिणकालिका । आगमेषु महाशक्तिः ख्याता श्रीभुवनेश्वरी ॥ २ ॥

महागुप्ता गुह्यकाली नाम्ना शास्त्रेषु कीर्तिता । महोग्रतारा निर्दिष्टा महाज्ञप्तेति भूतले ॥ ३ ॥ महानन्दा कुब्जिका स्यात् लोकेऽत्र जगदम्बिका । त्रिशक्त्याद्याऽत्र चामुण्डा महास्पन्दा प्रकीर्तिता ॥ ४ ॥ महामहाशया प्रोक्ता बाला त्रिपुरसुन्दरी । श्रीचक्रराजः सम्प्रोक्तस्त्रिभागेन महेश्वरि ॥ ५ ॥ ॥

॥ देवी खड्गमाला स्तोत्ररत्नम् ॥ ह्रींकाराननगर्भितानलशिखां सौः क्लींकलाम् बिभ्रतीं सौवर्णाम्बरधारिणीं वरसुधाधौतां त्रिनेत्रोज्ज्वलां ।वन्दे पुस्तकपाशमङ्कुशधरां स्रग्भूषितामुज्ज्वलां त्वां गौरीं त्रिपुरां परात्परकलां श्रीचक्रसञ्चारिणीम् ॥ अस्य श्री शुद्धशक्तिमालामहामन्त्रस्य, उपस्थेन्द्रियाधिष्ठायी वरुणादित्य ऋषयः देवी गायत्री छन्दः सात्विक ककारभट्टारकपीठस्थित कामेश्वराङ्कनिलया महाकामेश्वरी श्री ललिता भट्टारिका देवता, ऐं बीजं क्लीं शक्तिः, सौः कीलकं मम खड्गसिद्ध्यर्थे सर्वाभीष्टसिद्ध्यर्थे जपे विनियोगः, मूलमन्त्रेण षडङ्गन्यासं कुर्यात् ।ध्यानम् तादृशं खड्गमाप्नोति येव हस्तस्थितेनवै अष्टादशमहाद्वीपसम्राड्भोक्ताभविष्यति

आरक्ताभांत्रिणेत्रामरुणिमवसनाम् रत्नताटङ्करम्याम्
हस्ताम्भोजैस्सपाशाम्कुशमदनधनुस्सायकैर्विस्फुरन्तीम् आपीनोत्तुङ्गु
वक्षोरुहकलशलुठत्तारहारोज्ज्वलाङ्गीं
ध्यायेदम्भोरुहस्थामरुणिमवसनामीश्वरीमीश्वराणाम् ।लोमित्यादिपञ्च पूजाम् कुर्यात्,
यथाशक्ति मूलमन्त्रम् जपेत् ।ॐ ऐं ह्रीं श्रीं ऐं क्लीं सौः ॐ नमस्त्रिपुरसुन्दरी, हृदयदेवी,
शिरोदेवी, शिखादेवी, कवचदेवी, नेत्रदेवी, अस्त्रदेवी, कामेश्वरी, भगमालिनी,
नित्यक्लिन्ने, भेरुण्डे, वह्निवासिनी, महावज्रेश्वरी, शिवदूती, त्वरिते, कुलसुन्दरी,
नित्ये, नीलपताके, विजये, सर्वमङ्गले, ज्वालामालिनी, चित्रे, महानित्ये,
परमेश्वरपरमेश्वरी, मित्रेशमयी, उड्डीशमयी, चर्यानाथमयी, लोपामुद्रमयी,
अगस्त्यमयी, कालतापशमयी, धर्माचार्यमयी, मुक्तकेशीश्वरमयी, दीपकलानाथमयी,

विष्णुदेवमयी, प्रभाकरदेवमयी, तेजोदेवमयी, मनोजदेवमयि, कल्याणदेवमयी, वासुदेवमयी, रत्नदेवमयी, श्रीरामानन्दमयी, अणिमासिद्धे, लघिमासिद्धे, गरिमासिद्धे, महिमासिद्धे, ईशित्वसिद्धे, वशित्वसिद्धे, प्राकाम्यसिद्धे, भुक्तिसिद्धे, इच्छासिद्धे, प्राप्तिसिद्धे, सर्वकामसिद्धे, ब्राह्मी, माहेश्वरी, कौमारि, वैष्णवी, वाराही, माहेन्द्री, चामुण्डे, महालक्ष्मी, सर्वसङ्क्षोभिणी, सर्वविद्राविणी, सर्वाकर्षिणी, सर्ववशङ्करी, सर्वोन्मादिनी, सर्वमहाङ्कुशे, सर्वखेचरी, सर्वबीजे, सर्वयोने, सर्वत्रिखण्डे, त्रैलोक्यमोहन चक्रस्वामिनी, प्रकटयोगिनी, कामाकर्षिणी, बुद्ध्याकर्षिणी, अहंकाराकर्षिणी, शब्दाकर्षिणी, स्पर्शाकर्षिणी, रूपाकर्षिणी, रसाकर्षिणी, गन्धाकर्षिणी, चित्ताकर्षिणी, धैर्याकर्षिणी, स्मृत्याकर्षिणी, नामाकर्षिणी, बीजाकर्षिणी, आत्माकर्षिणी, अमृताकर्षिणी, शरीराकर्षिणी, सर्वाशापरिपूरक

चक्रस्वामिनी, गुप्तयोगिनी, अनङ्ग कुसुमे, अनङ्गमेखले, अनङ्गमदने,
अनङ्गमदनातुरे, अनङ्गरेखे, अनङ्गवेगिनी, अनङ्गाङ्कुशे, अनङ्गमालिनी,
सर्वसङ्क्षोभणचक्रस्वामिनी, गुप्ततरयोगिनी, सर्वसङ्क्षोभिणी, सर्वविद्राविनी,
सर्वाकर्षिणी, सर्वह्लादिनी, सर्वसम्मोहिनी, सर्वस्तम्भिनी, सर्वजृम्भिणी,
सर्ववशङ्करी, सर्वरञ्जनी, सर्वोन्मादिनी, सर्वार्थसाधिके, सर्वसम्पत्तिपूरिणी,
सर्वमन्त्रमयी, सर्वद्वन्द्वक्षयङ्करी, सर्वसौभाग्यदायक चक्रस्वामिनी, सम्प्रदाय योगिनी,
सर्वसिद्धिप्रदे, सर्वसम्पत्प्रदे, सर्वप्रियङ्करी, सर्वमङ्गलकारिणी, सर्वकामप्रदे,
सर्वदुःखविमोचनी, सर्वमृत्युप्रशमनि, सर्वविघ्ननिवारिणी, सर्वाङ्गसुन्दरी,
सर्वसौभाग्यदायिनी, सर्वार्थसाधक चक्रस्वामिनी, कुलोत्तीर्णयोगिनी, सर्वज्ञे, सर्वशक्ते,
सर्वैश्वर्यप्रदायिनी, सर्वज्ञानमयी, सर्वव्याधिविनाशिनी, सर्वाधार स्वरूपे, सर्वपापहरे,

सर्वरक्षास्वरूपिणी, सर्वेप्सितफलप्रदे, सर्वरक्षाकर चक्रस्वामिनी, निगर्भयोगिनी,
कामेश्वरी, मोदिनी, विमले, अरुणे, जयिनी, सर्वेश्वरी, कौलिनिवशिनी,
सर्वरोगहरचक्रस्वामिनी, रहस्ययोगिनी, बाणिनी, चापिनी, पाशिनी, अङ्कुशिनी,
महाकामेश्वरी, महावज्रेश्वरी, महाभगमालिनी, सर्वसिद्धिप्रदचक्रस्वामिनी,
अतिरहस्ययोगिनी, श्री श्री महाभट्टारिके, सर्वानन्दमय चक्रस्वामिनी,
परापरातिरहस्ययोगिनी, त्रिपुरे, त्रिपुरेशी, त्रिपुरसुन्दरी, त्रिपुरवासिनी, त्रिपुराश्रीः,
त्रिपुरमालिनी, त्रिपुरसिद्धे, त्रिपुराम्बा, महात्रिपुरसुन्दरी, महामहेश्वरी,
महामहाराज्ञी, महामहाशक्ते, महामहागुप्ते, महामहाज्ञप्ते, महामहानन्दे,
महामहास्कन्धे, महामहाशये, महामहा श्रीचक्रनगरसाम्राज्ञी, नमस्ते नमस्ते नमस्ते

नमः ।एषा विद्या महासिद्धिदायिनी स्मृतिमात्रतः अग्निवातमहाक्षोभे
राजाराष्ट्रस्यविप्लवे ।लुण्ठने तस्करभये सङ्ग्रामे सलिलप्लवे, समुद्रयानविक्षोभे
भूतप्रेतादिके भये अपस्मारज्वरव्याधिमृत्युक्षामादिजेभये, शाकिनी
पूतनायक्षरक्षःकूष्माण्डजे भये, मित्रभेदे ग्रहभये व्यसनेष्वाभिचारिके, अन्येष्वपि च
दोषेषु मालामन्त्रं स्मरेन्नरः सर्वोपद्रवनिर्मुक्तस्साक्षाच्छिवमयोभवेत्,
आपत्कालेनित्यपूजाम् विस्तारात्कर्तुमारभेत्, एकवारं जपध्यानम् सर्वपूजाफलं लभेत्,
नवावर्णदेवीनां, ललिताया महौजनः एकत्रगणनारूपोवेदवेदाङ्गगोचरः,
सर्वागमरहस्यार्थः स्मरणात्पापनाशिनी ।ललितायामहेशान्या माला विद्यामहीयसी,
नरवश्यं नरेन्द्राणां वश्यं नारीवशङ्करम् ।अणिमादिगुणैश्वर्यं रञ्जनं पापभञ्जनम्
।तत्तदावरणस्थायि देवताबृन्दमन्त्रकम् ।मालामन्त्रं परम् गुह्यां परं धामप्रकीर्तितम्

।शक्तिमालापञ्चधास्याच्छिवमालाचतादृशी, तस्माद्गोप्यतराद्गोप्यं रहस्यं भुक्तिमुक्तिदम् ।इति श्री वामकेश्वरतन्त्रे उमामहेश्वरसंवादे देवीखड्गमालास्तोत्ररत्नं सम्पूर्णं ॥